संस्तीर्य[1] । १२ । उद्भिन्दतीं संजयन्तीं यथा वृक्षमशनि-रिद्मुग्रायेति[2] वासितानक्षान्निवपति[3] । १३ । अम्बयो यन्ति शंभुमयोभू हिरण्यवर्णा यददः पुनन्तु मा ससुषी-र्हिमवतः प्र स्रवन्ति वायोः पूतः पवित्रेण शं च नो मयश्च नो ऽनडुह्मस्त्वं प्रथमं मह्यमापो वैश्वानरो रश्मि-भिरित्यभिवर्षणावसेचनानाम्[4 5] । १४ । उत्तमेन[6] वाच-स्पतिलिङ्गाभिरुद्यन्तमुपतिष्ठते[7] । १५ । स्नातो ऽहत-वसनो नित्त्वाहतमाछादयति[8, 9] । १६ । ददाति[10] । १७ । यथा मांसमिति[11] वननम्[12] । १८ । वत्सं संधाय्य गो-मूत्रेणावसिच्य त्रिः परिणीयोपचृतति[13] । १९ । शिरः-कर्णमभिमन्त्रयते[14] । २० । वातरंहा इति[15] स्नाते[16] ऽश्वे

---

[1] D (schol.) द्यूतशालां छादयित्वा. — [2] iv. 38. 1; vii. 50. 1; 109. 1. — [3] D (schol.) अक्षान्विभीतकान्निर्मुष्यत्वात्कालनियमभावः । . . . दधिमधुनोद्वासनं (!cf. Kāuç. 7. 19) यथांतरत्वात् । . . . वैश्वानरो रश्मिभिरिति (vi. 62. 1) अस्य बध्यता नैमित्तिकमवशिष्यते । यथामुष्य संहिताक्रममात्रग्रहणा यथा द्यौरिति (ii. 15. 1) गोदाने पठितं द्यूतप्रतिषेधातिक्रमः । दोषनाशात्प्रायश्चित्तत्वं । द्यूतेनार्थमुत्थास्यमानस्य. — [4] i. 4. 1; 5. 1; 6. 1; 33. 1; iii. 13. 1; vi. 19. 1; 23. 1; 24. 1; 51. 1; 57. 3; 59. 1; 61. 1; 62. 1; cf. the अपां सूक्तानि, Kāuç. 7. 14; also 9. 1 fg. — [5] D (text) °सेचनानि; D (schol.) अभिवर्षणाः फलवत्वाभिवर्षण (!) समुत्पतन्त्वित्यस्य (iv. 15. 1; cf. sūtra 1) यानि कर्माणि विहितानि अवसेच उदकेनाप्लवनं अवसेचनफलमर्थोत्थापनमधिकारात् । प्रतीकानां विकल्पः. — [6] vi. 62. 1. — [7] D (schol.) पु(न)रेहि वाचस्पत इति (i. 1. 2) वाचस्पतिलिंगात् । वाचस्पते पृथिवी नः स्योनेति (xiii. 1. 17) लिङ्गसमवाये ये त्रिषप्तीयं (i. 1) क्रमभेदात् । . . . अर्थमुत्थास्यन् (Cod. °स्य) प्रतिग्रहदोषप्रशमात् । प्रायश्चित्तत्वं. — [8] Ch E Bi D (text) नित्या°; D (schol.) प्रक्षाल्य (Cod. प्रक्षा). — [9] K P Bi Bh °छादयते. — [10] This word in wanting in D. — [11] vi. 70. 1. — [12] K P Bh Ch नवनं; D (schol.) गोः सवत्सं संभजफलं कर्मेत्यर्थः. — [13] D (schol.) गोः समीपे बध्नाति । उपवर्तते सूक्त प्रधाननिर्देशात्. — [14] D (schol.) गोः शिरःकर्णाभिमंत्रणं. — [15] vi. 92. 1. — [16] Ch स्नातो.

संपातानभ्यतिनयति[1] । २१ । पलाशे चूर्णेषूत्तरान्[2] । २२ । आचमयति[3] । २३ । आप्लावयति[4] । २४ । चूर्णैरवकिरति । २५ । त्रिरेकया चेति[5] । २६ । ॥ ५ ॥ ॥ ४१ ॥

भद्रादधीति[6] प्रवत्स्यन्नुपदधीत[7] । १ । जपति[8] । २ । यानं संप्रोक्ष्य विमोचयति[9] । ३ । द्रव्यं संपातवदुत्थापयति[10] । ४ । निर्मृज्योपयछति[11] । ५ । उभा[12] जिग्यथुरित्यार्द्रपादाभ्यां सांमनस्यम्[13] । ६ । यानेन प्रत्यञ्चौ[14] ग्रामान्प्रतिपाद्य प्रयछति । ७ । आयातः समिध आदायोर्जे[15] [16] बिभ्रदित्यसंकल्पयन्नेत्य सकृदादधाति[17] । ८ । ऋचं[18] सामे-

---

[1] D (schol.) अभ्यातानांते स्नापयत्यश्वत उदपात्रे संपातानानयति. — [2] D (schol.) पलाशवृक्षपर्णातिस्थितेषु सुरभिचूर्णेषूत्तरान्संपातान्. — [3] E P आकामयति; D (schol.) आप्लवनत्वादाचमनं प्राप्तं प्रथमं विधीयते. — [4] D (schol.) अश्वं. — [5] vii. 4. 1; D (schol.) चूर्णैरवकिरत्यश्वं । त्रिरेकया च दशभिश्चेति । अश्वस्य विधिकर्मेदमर्थमुत्थास्यन्निति (cf. sū. 8) प्रकरणात्. — [6] vii. 8. 1. — [7] D (schol.) अर्थमोहमानः प्रवत्स्यन्ननया हविषामन्यतमं जुहुयात्; cf. Kāuç. 41. 8, note. — [8] D (schol.) अथवा जपति. — [9] D (schol.) येन गच्छत्यर्थं तदद्भिः संप्रोक्ष्य विमोचयति । यत्रयत्र विमोचयति प्रेषकृता (Cod. °त्ता!) तत्रतत्रैवं. — [10] D (schol.) विक्रेयद्रव्य(!)प्रतिषिद्धं । द्रव्यग्रहणमविक्रयनिवृत्त्यर्थं । वैश्यकर्तोरुत्थापयति । विक्रयार्थं नयनं. — [11] Ch निमृज्यो°; D (schol.) क्रीतं द्रव्यं सुष्ठु शोधयित्वा स्वीकुर्यात् । स्वीकरणे मंत्रप्रधाननिर्देशात्. — [12] vii. 44. 1. — [13] D (schol.) एकया आर्द्रपाणिपादं ययोस्तावार्द्रपाणिपादौ (Cod. यस्योस्ता°) ताभ्यां प्रयच्छति । पण्यामिति(!). — [14] K P Ch D (text) प्रत्यंचो; Bi प्रत्यंचा; D (schol.) यानेन पार्श्वान्मुखे (! for पश्चान्मुखौ? cf. Kāuç. 44. 2, note) प्रतिपादयति सांमनस्यं बहूनामपि भवति । अर्थोत्थापनप्रकरणादिह सांमनस्यवचनं सह वाणिज्येन कलहो न स्यात्. — [15] Ch P Bh D (text) आधायो°; D (schol.) प्रत्यागच्छन् पथि याः समिधस्तान् (!) गृहीत्वा. — [16] vii. 60. 1. — [17] D (schol.) ऊर्जं बिभ्रदित्यर्चेनासंकल्पयन् गृहविशेषं साधारणे देशे सकृदादधाति । प्रत्यृचं न प्रतिवाणिजमुत्तमं पुरुषप्रयोगे ऽपि त्रैवर्णिकारे. — [18] vii. 54. 1; D (schol.) वेदार्थाभिज्ञ इत्यर्थः । तस्येदं कर्म ऋचं सामेति द्वाभ्यां प्रत्यृचं होमं आज्येन च जुहोति. —

त्यनुप्रवचनीयस्य जुहोति । ९ । युक्ताभ्यां तृतीयाम् । १० । आनुमतीं[1] चतुर्थीम् । ११ । समावर्तनीयसमापनीययोश्चै-षेज्या[2] । १२ । अपो दिव्या इति[3] पर्यवेतव्रत[4] उदकान्ते शा-न्त्युदकमभिमन्त्रयते । १३ । अस्तमिते समित्पाणिरेत्य तृ-तीयावर्जं[5] समिध आदधाति[6] । १४ । इदावत्सरायेति व्रतविसर्जनमाज्यं जुहुयात् । १५ । समिधो ऽभ्याद-ध्यात् । १६ ।

---

[1] vii. 20. 6 (cf. Kāuç. 23. 4); D (schol.) इत्यथोनुमत्या (! for इत्य-थानु° ?) विधिरनुमतये स्वाहेति; Daç. Kar. adds: ततः दोषो गायेति (vi. 1. 1) सूक्तेन आगमकृशरं चरु संपात्याभिमंत्र्य ब्रह्मचारी प्राशयति; Ath. Paddh.: दोषो गायेति आथर्वणं समावृत्याश्नाति । अभ्याताना-द्युत्तरतंत्रं; cf. Kāuç. 59. 25. — [2] Ch चैाषज्या; E चोषिज्या; B चैषज्या; D (text) चौषिज्या; D (schol.) समावर्तनमर्हति । यो ब्रह्मचारी सन्समावर्तनीयः (Cod. सत्स°) । वेदार्थविज्ञ (Cod. °र्थाविज्ञ) इत्यर्थः । समापनमर्हति यः । . . . तयोरुभयोरपि एषैव क्रिया कार्यविशेषस्तु ईड्या (!) यात इत्यर्थः । वरुणयागवत् दर्शपूर्णमासाभ्यां पाकयज्ञा इति देशवचनात् (Kāuç. 6. 30) । अव्यक्तचोदनाधर्मत्वं । देवताभावात् । समावर्तनस्य नित्यत्वं समापनी(य)योरिति युक्तं वक्तुमकल्पांतरत्वात् । बह्व-चरस्य पूर्वनिपातः (cf. Pāṇ. ii. 2. 34) वचनांतरं मा भूत् । अधिकारसं-प्रत्ययात् । अतश्च समावर्तनीयं समापनवत्. — [3] vii. 89. 1 (x. 5. 46); Ath. Paddh. आपो हि ष्ठा इति चतसृभिः (i. 5. 1—4) शान्त्युदकमभि-मन्त्रयते । अपो दिव्या इत्यनुयोजयति । मातल्यंते (xi. 6. 23 ; cf. Kāuç. 55. 1, note) । ततो अभ्यातानानि जुहोति; Daç. Kar. सनुच्छिष्टैरिति (xi. 7. 3?) अपो दिव्या नानुयोजनं (!) etc., like Ath. Paddh. — [4] D (schol.) परि-समाप्तब्रह्मचर्यव्रतस्य शिरोव्रतपरिसमाप्तौ परिमोच्य उदकसमीपे वपनार्थं शांत्युदकमभिमंत्रयते. — [5] Ath. Paddh. अपो दिव्या इति द्वाभ्यां एधो ऽसीत्येकया तिस्रः समिधः; vii. 89. 1, 2, 4. — [6] D (schol.) इह विधौ न मंत्रप्रकरणात् । एत्येति वचनात् । परिमोच्यांगसमिदाधानं. — [7] D (schol.) परिधापनांते पार्थिवस्य मा प्र गामेति (ii. 29. 1; xiii. 1. 59) जपित्वा अभ्यातानानि हुत्वा इदावत्सरायेत्यादिभिः कल्पजाभिः चतसृ-भिराज्यं जुहुयात् । संहितायामभा(वा)न्मंत्रपाठः; Ath. Paddh. चतसृभिः कल्पजा(भिः); Daç. Kar. कल्पजैः चतुर्भिः. The verse AV. vi. 55. 3 is therefore not referred to by this pratīka; cf. the verses following, as also TS. v. 7. 2. 4, and Weber, Nakṣatra ii. 298, note 1.

इदावत्सराय परिवत्सराय संवत्सराय[1] प्रतिवेदयाम
एनत्[2] ।
यद्व्रतेषु दुरितं निजग्मिमो दुर्हार्दे तेन शमलेनाङ्क्मः[3]॥
यन्मे व्रतं व्रतपते लुलोभाहोरात्रे[4] समधातां[5] म एनत् ।
उद्यन्पुरस्ताद्भिषगस्तु चन्द्रमाः सूर्यो रश्मिभिरभिगृणा-
यद्व्रतमतिपेदे चित्त्या[6] मनसा हृदा । [त्वेनत् ॥
आदित्या रुद्रास्तन्मयि वसवश्च समिन्धताम् ॥
व्रतानि व्रतपतय उपाकरोम्यग्नये ।
स मे द्युम्नं बृहद्यशो दीर्घमायुः कृणोतु म इति[7]
व्रतसमापनीरादधाति[8] । १७ । त्रिरात्रमरसाशी[9] स्ना-
तव्रतं चरति[10] । १८ । निर्लक्ष्म्यमिति[11] पापलक्षणाया[12]
मुखमुक्षत्यन्वृचं[13] दक्षिणात्केशस्तुकात् । १९ । पलाशेन[14]
फलीकरणान्हुत्वा शेषं प्रत्यानयति[15] । २० । फलीकरणतु-

---

[1] Wanting in Ch. — [2] Ch Bü एतत्. — [3] So emended; K Bi शमलेनाघ्मः; E Ch °नाध्यः; P Bh °नायः; Bü °नायमः. — [4] So emended; Bü Bi P नुलोभा°; Ch नलोभा°; E तुलोभा°; K नुलोभा अहोरात्रे; Bh नुलोभा ऽहोरत्रे; Daç. Kar. लाभा आहो. — [5] E समाधातां; Daç. Kar. समिधातां. — [6] MSS. चित्या. — [7] The pratīka of this verse occurs Kāuç. 6. 19, where Dārila designates it as कल्पजा; also Vāit. Sū. 4. 22. — [8] D (schol.) समिध इति संनिधानात्. — [9] D (schol.) प्रथमाह्न आरभ्य त्रीण्यहानि रसवर्जमश्नाति। लवणरहितं. — [10] Ch E D (schol.) स्नातकव्रतं; Ath. Paddh. adds: यस्मात्कोशादिति (xix. 72. 1) जपेत्. — [11] i. 18. 1. — [12] K Bü Ch (sec. man.) D (text) पापलक्षणया; D (schol.) या स्त्री पापलक्षणा अनिष्टफलसूचकं (!) चिह्नं यस्याः सा पापलक्षण (!) दुर्भगेति केचित् । तस्या मुखं सिञ्चत्युदकेन दक्षिणकेशस्तुकादारभ्य निर्लक्ष्म्यमिति सूक्तेनान्वृचं सूक्तक्रमभेदः अर्थोत्थापनाधिकारनिवृत्त्यर्थः । तस्मादधर्मतः क्षणफलमिदं कर्म अहोमत्वादन्वृचंवचनं. — [13] Ch उख्यति; E उख्यंति. — [14] D (schol.) पलाशेन पात्रेण प्रकृतेन सूक्तेन. — [15] D (schol.) फलीकर (!) कुक्कुसाः (Cod.

षबुसावतक्षणानि सव्यायां पादपाष्र्ण्यां[1] निदधाति।२१। अपनोदनापाघाभ्यामन्वीक्ष्य प्रतिजपति[2, 3]।२२। दीर्घायुत्वायेति[4] मन्त्रोक्तं बध्नाति[5]।२३।॥ ६ ॥ ॥ ४२ ॥

कर्शफस्येति[6] पिशङ्गसूत्रमरलुदण्डं यदायुधम्[7]।१। फलीकरणैर्धूपयति[8]।२। अति[9] धन्वानीत्यवसाननिवेशनानुचरणानि[10] निनयनेज्या[11]।३। वास्तोष्पतीयैः[12]

---

कुकु॰) . . . एवमेव बुसस्य होमः। प्रत्यानयने एकमेव तत् चणहोमः। . . . चतुः सूक्तस्यावृत्तिः द्रव्यभेदात्. —

[1] Ch ॰पार्ष्णौ; D (schol.) पापलक्षणायाः. — [2] D (schol.) आरेऽसावित्यपनोदनानां (i. 26. 1; cf. Kāuç. 14. 14) अप नः शोशुचदघमित्यपाघप्रतीकविकल्पो (iv. 33. 1) ऽपनोदनक्रमविधानात्. — [3] So K only; Ch E Bü D (text) अन्वीक्षन्प्र॰; P Bh Bi अन्वीक्ष्यं. — [4] i. 4. 1. — [5] D (schol.) जंगिडमणिं जंगिडो अर्जुनः पिशाचचातनमंत्रलिंगत्वात्. — [6] iii. 9. 1. — [7] D (schol.) पिशंगकपिलावर्णवद्दणं (!) दारुक (!) स्यात्। अरलुक इति प्रसिद्धाभिधानः। पिशाचनाशनं दंडं विसृज्य (! for ॰मृज्य? cf. Kāuç. 23. 11) धारयति। भूदंडमरलुकदंडं (? Cod. भूदंड अ॰!) संपातवंतं विमृज्य धारयतीत्येकोदशग्रहणात्। यदायुधं धारयति तत्संपातवंतं विमृज्य धारयति। विष्कंधदूषणं (Cod. ॰भूषणं). — [8] D (schol.) विष्कंधं (!) धूपनं जुष्ठ (!) धूपने मंत्रः। फलीकरणां कथितां (!) मंत्रनियमात् दोषनाशनं. — [9] vii. 41. 1. — [10] K (sec. man.) Ch (sec. man.) D (text and schol.) ॰वशान॰. — [11] Thus emended; MSS. (with haplographia?) ॰चरणानिनयनेज्या; D (schol.) अति धन्वानीति द्व्यर्चं इहैव ध्रुवामित्यष्टभिर्धारयति (iii. 12. 1; cf. Kāuç. 8. 23)। अति धन्वानीति कस्मादुच्यते। ईड्यायाः (!) वशाशमनार्थत्वात्। एवंस्थिते (Cod. एव॰) निनयनानुचरणायार्थथासंख्यत्वात् (!?) अवशानं (!) निधानदेशनिवेशनं गृहं। अवशाने (!) अनुचरणं। निवेशननिनयनं अनुचरणं। शान्त्युदकेन संप्रोक्षणनिनयनमुदकावर्जनं (Cod. ॰नियन॰)। ईड्यायाः श्येनदेवता मंत्रलिंगात्। एवमस्य सूक्तस्य प्रयोगात्तु गृहस्थाने श्येनेनेज्याति धन्वानीति द्वाभ्यां होमः। पाकयज्ञतंत्रे; Ath. Paddh. अथ बृहच्छालाकर्म उच्यते (cf. Kāuç. 23. 6)। अ॰ ध॰ इति उदपात्रमभिमंत्र्य भूमौ निनयति। यत्र गृहं करिष्यति तत्र विघ्नं शमयति। श्येनदेवतापाकयज्ञविधानेनाज्यभागांतं (MSS. सेन॰) कृत्वा। . . . चरुं जुहोति। भूमिस्थाने यत्र गृहं करिष्यति। अथवा नवे गृहे श्येनयागः कर्तव्यः. — [12] For the वास्तोष्पतीयगण see Kāuç. 8. 23. —

कुलिजकृष्टे[1] दक्षिणतो ऽग्नेः संभारमाहरति[2]। ४। वास्तोष्पत्यादीनि[3] महाशान्तिमावपते[4]। ५। मध्यमे गर्ते दर्भेषु[5] व्रीहियवमावपति। ६। शान्त्युदकशष्पशर्करमन्त्येषु[6]। ७। इहैव ध्रुवामिति[7] मीयमानामुच्छ्रीयमाणामनुमन्त्रयते[8, 9]। ८। अभ्यज्यतेनेति[10] मन्त्रोक्तम्[11]। ९। पूर्णे[12] नारीत्युदकुम्भमग्निमादाय प्रपद्यन्ते[13]। १०। ध्रुवाभ्यां[14] दृंहयति। ११। शंभुमयोभुभ्यां[15] विषन्दयति[16]। १२।

वास्तोष्पते प्रति जानीह्यस्मान्स्वावेशो अनमीवो न एधि।

---

[1] Bü कुलिंज°; D (schol.) अग्नेर्दक्षिणतः कुलीयेन (!) कर्षति; Bi has a colon here. — [2] D (schol.) व्रीहियवौषधिस्थूणादि संभारादि अभिमंत्र्य स्थापयति. — [3] D (schol.) इहैव ध्रुवामित्यादीनि (cf. Kāuç. 8. 23) पंचगणानां तृप्रप्रभृतीनि (! for मातृप्रभृ°?) प्रतीकान्यावपते; Ath. Paddh. अत्र स्थाने इहैव ध्रुवामित्येवमादीनि चत्वारि (!) गणैः कौशिकोक्तैः (the four gaṇas beginning with the वास्तोष्पतीय, Kāuç. 8. 23). — [4] D (schol.) नडमा रोहेति (xii. 2) अनुवाकं महाशान्तिमावपते (cf. Kāuç. 9. 6, note; 39. 27; 44. 6) ... शांत्युदके शांत्युदकस्योत्तरतंत्रवचनात्; Ath. Paddh. ततः सावित्री पुनः शं नो देवी (ii. 25. 1; cf. Kāuç. 9. 7) शान्त्युदकेन तेन शालां संप्रोक्षति. — [5] D (schol.) प्रधानस्थूणागर्ते। दर्भाणामुपरि. — [6] D (text) °शार्कराम°; D (schol.) शांत्युदकविरूढशर्कराश्चावपति; Ath. Paddh. अन्येषु स्थूणागर्तेषु प्रक्षिपति. — [7] iii. 12. 1. — [8] K P Bh D (text) नीयमानाम्; D (schol.) मध्यमस्थूणां; Ath. Paddh. मीयमानां शालां. — [9] Ch °च्छ्रीयमाणामनु°. — [10] K P Bh भ्यज्यतेति; Ch ऽभ्यज्यतेति; iii. 12. 6. — [11] D (schol.) वंशमारोपयति; Ath. Paddh. स्थूणावंशावारोपयति (Cod. °वंशारो°!). — [12] iii. 12. 8. — [13] D (schol.) एकया उदकपूर्णघटं गृह्णाति। उत्तरयाग्निं ताभ्यामग्रस्थिताभ्यां सर्वाणि मानुष्याणि गृहं प्रविशंति; Ath. Paddh. एकया उदकुम्भसहितां पत्नीमनुमन्त्रयते। गृहे प्रविशति। यजमानपुरुषो ऽग्निं गृहीत्वा अन्ये प्रविशंति। एकैकांगकर्मत्वात्। अत एवाविधिकर्मत्वात्. — [14] Ath. Paddh. इहैव ध्रुवामिति द्वाभ्यामृग्भ्यां (iii. 12. 1, 2) वृष्टिं कारयति. — [15] i. 5. 1; 6. 1; cf. schol. to Kāuç. 9. 1. — [16] D (schol.) उदकेन क्लेदयति गृहभुवं; Ath. Paddh. उदकुम्भं गृह आच्छादयति. —

यत्त्वेमहे[1] प्रति नस्तज्जुषस्व चतुष्पदो द्विपद आ वे-
शयेह[2]।
अनमीवो[3] वास्तोष्पते विश्वा रूपाण्याविशन्[4]।
सखा सुशेव एधि न इति[5]

वास्तोष्पतये क्षीरौदनस्य जुहोति । १३ । सर्वान्नानि ब्राह्मणान्भोजयति । १४ । मङ्गल्यानि[6] । १५ । ये अग्नय इति[7] क्रव्यादनुपहत इति पालाशं[8] बध्नाति । १६ । जुहोति[9] । १७ । आदधाति[10] । १८ । उदञ्चनेनोदपात्र्यां[11] यवानञ्जिरानीयोल्लोपम्[12] । १९ । ये अग्नय[13] इति पालाश्या दर्व्या मन्थमुपमथ्य काम्पीलीभ्यामुपमन्थनीभ्याम्[14] । २० । शमनं च । २१ । ॥ ७ ॥ ॥ ४३ ॥

य आत्मदा इति[15] वशाशमनम्[16] । १ । पुरस्तादग्नेः

---

[1] Thus emended; MSS. यत्तेमहे. — [2] Cf. RV. vii. 54. 1; TS. iii. 4. 10. 1; Çāñkh. Çr. ii. 16. 1; Pār. Gṛ. iii. 4. 7; Âçv. Gṛ. ii. 9. 9; Çāñkh. Gṛ. ii. 14. 5; iii. 4. 8; Gobh. iv. 7. 32; Mantrabrāhmaṇa ii. 6. 1; Ath. Paddh. designates this and the next verse as शांखायिकीये ऋचे; also as कल्पजे. — [3] K P Ath. Paddh. अनामीवा. — [4] Ch °विशं. — [5] Cf. RV. vii. 55. 1; Nirukta 10. 17; Pār. Gṛ. iii. 4. 7; Çāñkh. Gṛ. iii. 4. 7. — [6] D (schol.) ब्राह्मणस्वस्तिवाचनं । बहुधान्यबहुपुत्रआयुष्वर्चस्वित्यादि (!) । बलादारकादीन्यपि (Cod. °नेपि) वाचयेयुः. — [7] iii. 21. 1. — [8] Bü पलाशं; D (schol.) सप्त ऋग्भिः । पालाशमणिं बध्नाति । यदि जीयात् क्रव्यादनुपहतः विनाशोयेति (!?). — [9] D (schol.) अथवात्रैव निमित्त (!) जुहोत्याज्यं. — [10] D (schol.) अत्रैव. — [11] E Bi Ch (sec. man.) D (text) °दकपात्र्यां. — [12] E P °योलोपं; D (schol.) उल्लोपं आलोपात्र्या (! for आलोड्य पात्र्यां?) यवां जुहोति । क्रव्यादनुपहत इत्येवं. — [13] K D (text) अग्न; iii. 21. 1. — [14] D (schol.) पूर्वत्रैव निमित्तप्रतीकग्रहणं सूत्रार्थं. — [15] iv. 2. 1. — [16] D (schol.) वशाया अतस्यार्थतस्त्वाद्विनियोगः शांतत्वात् . . . वशा गौर्या गर्भं न गृह्णाति तस्या दोषशमनार्थं पाकयज्ञिकं तंत्रं. —

प्रतीचीं धारयन्ति[1]। २। पश्चादग्नेः प्राङ्मुख उपविश्यान्वारब्धायै[2] शान्त्युदकं करोति[3]। ३। तच्चैतत्सूक्तमनुयोजयति[4]। ४। तेनैनामाचामयति च संप्रोक्षति च[5]। ५। तिष्ठंस्तिष्ठन्तीं महाशान्तिमुच्चैरभिनिगदति[6]। ६। य ईशे पशुपतिः पशूनामिति[7] हुत्वा[8] वशामनक्ति शिरसि ककुदे जघनदेशे। ७। अन्यतरां स्वधितिधारामनक्ति[9]। ८। अक्तया[10] वपामुत्खनति। ९। दक्षिणे पार्श्वे दर्भाभ्यामधिक्षिपत्यमुष्मै त्वा जुष्टमिति यथादेवतम्[11]। १०। निस्सालामित्युल्मुकेन[12] त्रिः[13] प्रसव्यं परिहरत्यनभिपरिहरन्नात्मानम्[14]। ११। दर्भाभ्यामन्वारभते[15]। १२। पश्चादुत्तरतो ऽग्नेः प्रत्यक्शीर्षीमुदक्पादीं[16. 17] निविध्यति[18]। १३। समस्यै तन्वा भवेत्य-

---

[1] D (schol.) आज्यभागांते पूर्वस्मिन्देशे अग्नेः पश्चान्मुखीं धारयति प्रैषकृता. — [2] D (schol.) वशानयनादुपविश्येतिवचनं (Cod. °विष्य°). — [3] Cf. Kāuç. 53. 6. — [4] D (schol.) तस्मिन् शांत्युदके एतद्य आत्मदा (iv. 2. 1) इति. — [5] D (schol.) तेन शांत्युदकेनैतां न कारयितारं... — [6] D (schol.) तां तिष्ठन् मूर्ध्नो ऽवस्थितस्तिष्ठंतीं वशां कृत्वा महाशांतिमुच्चैः प्रकर्षेण अभिनिगदनादेकश्रुत्या; cf. Kāuç. 9. 6, note; 39. 27; 43. 5. — [7] ii. 34. 1. — [8] E inserts here जुष्टमिति यथादेवतम्; cf. sū. 10. — [9] D (schol.) उभयधारायाः क्षुरिकायाः अन्यतरां धारां प्रक्षिपति. — [10] K P Bi D (text) उक्तया; D (schol.) अक्षितया (! for अधिक्षिप्तया?) धारया वशायाः वपामुद्धरति. — [11] D (schol.) वशाया (Cod. वशा) दक्षिणे पार्श्वे दर्भाभ्यामाहंति प्रजापतये त्वा जुष्टमधिक्षिपामीति. — [12] ii. 14. 1. — [13] Bü Ch °त्रिष्प्र. — [14] D (schol.) वशां परिहरति। प्रसव्यं आत्मनो वशां पश्चांतरेणोल्मुकहरणं। ... परिहार्य वशां संस्कार्यत्वात्. — [15] D (schol.) शामित्रदेशं नीयमानां पश्चादवस्थितां दर्भाभ्यां स्पृशति। परिभोजनीयाभ्यां. — [16] Ch (prim. man.) °शीर्षा; P Bh °शीर्षं; D (schol.) पश्चिमशिरसाम् (!). — [17] D (text and schol.) °पादां. — [18] D (schol.) पातयंति. —

न्यतरं दर्भमवास्यति[1]। १४। अथ प्राणानास्थापयति प्रजानन्त इति[2]। १५। दक्षिणतस्तिष्ठन्रक्षोहणं जपति[3]। १६। संज्ञप्तायां जुहोति

यद्वशा मायुमक्रतोरो[4] वा पड्भिराहत[5] [6]।

अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस इति[7]। १७। उदपात्रेण पत्न्यभिव्रज्य मुखादीनि गात्राणि प्रक्षालयते। १८। मुखं शुन्धस्व देवयज्याया इति। १९। प्राणानिति नासिके[8]। २०। चक्षुरिति चक्षुषी। २१। श्रोत्रमिति कर्णौ। २२। यत्ते क्रूरं यदास्थितमिति[9] समन्तं रज्जुधानम्[10]। २३। चरित्राणीति पादान्समाहृत्य[11]। २४। नाभिमिति नाभिम्। २५। मेढ्रमिति मेढ्रम्। २६। पायुमिति पायुम्। २७। यत्ते क्रूरं यदास्थितं[12] तच्छुन्धस्वेत्यवशिष्टाः[13] पार्श्वदेशे ऽवसिच्य यथार्थं व्रजति[14]। २८।

---

[1] D (schol.) याभ्यां दर्भाभ्यां वशान्वारब्धा (Cod. वशामन्व°) तयोरन्यतरं (!) दर्भविधिः कार्यः। वशाया अधः क्षिपति. — [2] ii. 34. 5. — [3] D (schol.) मार्यमाणाया दक्षिणत ऊर्ध्वः सन् रक्षोहणमनुवाकं (the anuvāka beginning with viii. 3. 1; cf. Kāuç. 8. 25) जपति। ... संज्ञप्यमानायां. — [4] Bü E मायुनक्र°; Ch Bi P Bh मायुंमक्र°; D cites only the pratīka यद्वशा मायुरिति (!). — [5] K Ch E पांड्भिर°. — [6] Bü Ch (sec. man.) °हतः. — [7] Cf. TS. iii. 1.4.3; Kāty. Çr. xxv. 9.12; Çāṅkh. Çr. iv. 17.10; Gobh. iii. 10. 28; Mantrabr. ii. 2. 8. — [8] D (schol.) प्राणानिति नासिकाप्राणान् शुन्धस्व देवयज्याया इति (so also the following passages are filled out) सर्वत्रोदर्कः साकांक्षत्वात्। यथार्थमुदर्कानिति वचनात् (Kāuç. 8. 22). — [9] D (schol.) शुंधस्व देवयज्यायै; cf. VS. vi. 15 fg. — [10] D (schol.) ग्रीवाया बंधनस्थानं (Cod. बंधनं°) समन्तं सर्वं इत्यर्थः. — [11] D (schol.) एवं पादानेकीकृत्य प्रक्षालयति सकृत्. — [12] Cf. VS. vi. 15 f. — [13] D has a colon here, though it continues the sūtra to व्रजति; so also K P Bh. — [14] D (schol.) ततः शुंधस्व देवयज्याया इति अनेनावशिष्टा अपः (Cod. आपः) पार्श्वदेशे ऽवसिच्य कर्ता यथाप्रयोजनमवश्यकार्यार्थं गच्छति. —

वपाश्रपण्यावाज्यं[1] स्रुवं स्वधितिं दर्भमादायाभिव्रज्योत्तानां[2, 3] परिवर्त्यानुलोमं नाभिदेशे दर्भमास्तृणाति[4]। २९। ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरिति[5] शस्त्रं प्रयच्छति। ३०। इदमहमामुष्यायणस्यामुष्याः[6] पुत्रस्य प्राणापानावपकृन्तामीत्यपकृत्य[7]। ३१। अधरप्रव्रस्केन लोहितस्यापहत्य। ३२। इदमहमामुष्यायणस्यामुष्याः[8, 9] पुत्रस्य प्राणापानौ निखनामीत्यास्ये[10] निखनति। ३३। वपया द्यावापृथिवी प्रोर्णुवाथामिति[11] वपाश्रपण्यौ वपया प्रच्छाद्य[12]। ३४। स्वधितिना प्रकृत्योत्कृत्य। ३५। आव्रस्कमभिघार्य[13]। ३६। वायवे[14] स्तोकानामिति दर्भाग्रं प्रास्यति[15]। ३७। प्रत्युष्टं रक्ष इति[16] चरुमङ्गारे[17] निदधाति। ३८।

---

[1] D (schol.) ययोः शाखयो स्थापिता वपा श्रप्यते वपाश्रपण्यौ. — [2] K P Bü °तिव्रज्यो°. — [3] D (schol.) शामित्रे (Cod. °त्रं) वशामुत्तानां कृत्वा. — [4] Bi °स्त्रिणाति; D (schol.) लोमानुगतां नाभिलक्षिते देशे वशाभिमुखमास्तृणाति. — [5] Cf. VS. iv. 1; v. 42; Kāty. Çr. v. 2. 15; Âçv. Gṛ. i. 17. 8; Çāñkh. Gṛ. i. 28. 12; Pār. Gṛ. ii. 1. 10; Gobh. ii. 9. 14; Mantrabr. i. 6. 5; Kāuç. 92. 18. — [6] K Bü Bh °ममुष्यायणस्या°. — [7] D (schol.) प्रथमेन मंत्रेण नाभिदेशं छिनत्ति. — [8] K Bh °पहतोदम्; E °पहति इदम्; P Bi °पतीदम्. — [9] K Bü Bh D (schol.) °ममुष्यायणस्या°; cf. Kāuç. 47. 22; also AV. x. 5. 36, etc. — [10] So E alone; K P Bü Bh Bi Ch आस्येने; D (text) आश्येन; D (schol.) स दर्भेण दर्भस्याधरेण (Cod. °धारेण) खंडेन लोहितं स्पृष्ट्वा (Cod. खंडेतन्नोहितं स्पृष्ट्र) द्वितीयेन मंत्रेण दर्भखंडं लोहितलिप्तं श्लेष्मश्रपणी निहितं। आश्यस्थानं (!) वा इतरशब्दस्य गतिवचनात्. — [11] Bü Ch प्रौर्णुवाथाम्; cf. VS. vi. 16[d]. — [12] D (schol.) वपाश्रपण (!) एवैकशाखाद्विशाखे पूर्वंच गृहीते। वपया प्रच्छाद्य. — [13] D (schol.) यस्माद्देशात् वपामुद्धृत्य (Cod. वपोद्धृत्य) तं (? Cod. त्नं) देशमभिघारयति. — [14] K P Bh वायोर्वे; Bü चायोर्वे. — [15] Thus emended; K प्राशयति; Ch प्रास्नाति; E प्रस्नाति; P Bi Bh प्राश्यति; D (schol.) to the entire sūtra, अग्नौ नाभिदेशनिहितं दर्भाग्रं अनियते देशे क्षिपणमेवं. — [16] Cf. VS. i. 7; TS. i. 1. 2. 1 etc.; Kāuç. 3. 9. — [17] So only E D (schol.); K Bi Bü Ch चरुमंगारे; P Bh चरुंमंगारे; D (text) चरामंगारे. —

देवस्त्वा सविता श्रपयत्विति श्रपयति । ३९ । सुशृतं[1] करोति । ४० । ॥ ८ ॥ ॥ ४४ ॥

यद्यष्टापदी स्याद्गर्भमञ्जलौ सहिरण्यं सयवं वा य आ-त्मदा इति[2] खदायां[3] त्र्यरत्नावग्नौ सकृज्जुहोति । १ । वि-शस्य समवत्तान्यवद्येत् । २ ।

हृदयं जिह्वा श्येनश्च दोषी पार्श्वे च तानि षट् ।
यकृद्वृक्कौ गुदश्रोणी[4] तान्येकादश दैवतानि[5,6] । ३ ।
दक्षिणः कपिलललाटः सव्या श्रोणिर्गुदश्च यः ।
एतानि त्रीणि त्र्यङ्गानि स्विष्टकृद्भाग एव[7] । ४ ।

तदवद्य[8] प्रज्ञातानि श्रपयेत् । ५ । होष्यन्द्विर्द्विर्देवतानाम-वद्येत्[9] । ६ । सकृत्सकृत्सौविष्टकृतानाम् । ७ । वपायाः समिद्ध[10] ऊर्ध्वा अस्येति[11] जुहोति । ८ । युक्ताभ्यां तृती-याम् । ९ । आनुमतीं[12] चतुर्थीम् । १० ।

जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूथ[13]

---

[1] D (text) सुशृतं. — [2] iv. 2. 1. — [3] D (schol.) खदा गर्तः. — [4] Ch गुदं. — [5] All MSS. except D, देवतानि. — [6] Cf. Kāty. Ç. vi. 7. 6; D (schol.) तान्येकादशान्यंगानि। अन्यतरयोर्द्वयोः श्रोण्योः। स्विष्टकृत्संयोगादेकादशत्वं; the last pāda is hypercatalectic.— [7] D (schol.) एवंयोगाद्देवता (Cod. एवयोगादे°) भुङ्क्ते। अतश्च (Cod. अनश्च) द्विदेवतानामपि हविः। एतेषां संप्रत्ययवृक्कयोर्भेदः एकादशत्वात्। दक्षिणकपिलललाटो बाहुः सव्यश्रोणी सक्थिनी गुहश्च एतानि त्रीणि त्र्यंगसंज्ञानि वितानवत्प्रेतानि . . .; the last pāda is catalectic. — [8] So all MSS; is the word to be emended to अवदाय or अवदाप्य? D (schol.) सचिह्नानि श्रपयेत्। एकस्यां स्थाल्यां अवद्यति देवतानि (!) आविःकृताणि चेति यथा स्यात्. — [9] MSS. °श्रपयेद्धोष्यं; D (schol.) हवनकाले हृदयादिभिः द्विर्द्विरवखंडयेत्. — [10] K Bü E P Bi समिध. — [11] v. 12. 1 (et al.); 27. 1. — [12] D (schol.) अनुमतिः सर्वमित्यनया, vii. 20. 6. — [13] Bü K (prim. man.) बभूव. —

घृतस्याग्ने तन्वा[1] सं भव सत्याः सन्तु यजमानस्य कामाः
स्वाहा[2] । ११ ।

ऊर्ध्वं नभसं मारुतं गच्छतमिति वपाश्रपण्यावनुप्रहरति । १२ । प्राचीमेकशृङ्गां[3] प्रतीचीं द्विशृङ्गाम्[4] । १३ । पित्र्येषु

वह वपां जातवेदः पितृभ्यो यत्रैतान्वेत्थ[5] निहितान्पराके ।
मेदसः कुल्या उप तान्स्रवन्तु[6] सत्या एषामाशिषः
सन्तु कामाः[7]

स्वाहा स्वधेति वपायास्त्रिर्जुहोति[8] । १४ । समवत्तानाम्[9] । १५ । स्थालीपाकस्य सम्राडस्यधिश्रयणं नाम सखीनामभ्यहं[10] विश्वा आशाः साक्षीय । कामो ऽसि कामाय त्वा सर्ववीराय सर्वपुरुषाय सर्वगणाय सर्वकामाय जुहोमि[11] ।

अन्वद्य नो ऽनुमतिः[12] पूषा सरस्वती मही ।
यत्करोमि तदृध्यताम-

नुमतये स्वाहेति जुहोति । १६ । क इदं कस्मा अदात्का-

---

[1] Ch E तन्वाः; P Bh तन्वः; K तन्व१. — [2] Pādas ab occur in TS. iii. 1. 4. 4; D (schol.) स्वाहाकारान्तया सकृदाज्यं जुहोति. — [3] Ch E D (text) प्राचीनमे°; D (schol.) प्रागग्रम्. — [4] K Ch E द्विःशृ°; D (schol.) to the entire sūtra, अग्नौ चिपति. — [5] P Pi Bü यत्रैनान्. — [6] K P Bi Bü Bh ताः; Ch ता; E तां. — [7] Cf. VS. xxxv. 20; Âçv. Gṛ. ii. 4. 13; Çāṅkh. Gṛ. iii. 13. 3; Pār. Gṛ. iii. 3. 9; Gobh. iv. 4. 22; Mantrabr. ii. 3. 16; Kāuç. 84. 1. — [8] D (schol.) इमं यमेति (xviii. 1. 60) वसाय (! for यमाय?) चतुर्थीमिति. — [9] D (schol.) समवत्तेभ्यः जुहोति. — [10] So emended after Ch E सखिनामभ्यहं; K Bü Bi P सखिनामव्ययं. — [11] So Ch only; the rest जुहोति. — [13] Cf. vii. 20. 1.

मस्तदग्ने यदन्नं पुनर्मैत्विन्द्रियमिति[1] प्रतिगृह्णाति । १७ ।
उत्तमा सर्वकर्मा[2] । १८ । वशया[3] पाकयज्ञा व्याख्या-
ताः । १९ । ॥ ९ ॥ ॥ ४५ ॥

उतामृतासुः शिवास्त[4] इत्यभ्याख्याताय प्रयच्छति[5] । १ ।
द्रुघणशिरो[6] रज्ज्वा बध्नाति । २ । प्रतिरूपं पलाशायोलो-
हहिरण्यानाम्[7] । ३ । येन सोमेति[8] याजयिषन्त्सारूपव-
त्समश्नाति[9, 10] । ४ । निधने यजते[11] । ५ । यं याचामि यदा-
शसेति[12] याचिषन्[13] । ६ । मन्त्रोक्तानि पतितेभ्यो देवाः
कपोत ऋचा कपोतममून्हेतिरिति[14] महाशान्तिमाव-

---

[1] D (schol.) क इदमिति द्वे । कामस्तदग्र इति सूक्तं । यदन्नमिति सूक्तं । पुनर्मैत्विंद्रियमित्येको; iii. 29. 7, 8; xix. 52. 1; vi. 71. 1; vii. 67. 1. — [2] Ch E P Bi सर्वकामा; D (text) सर्वकर्मासु (!); D (schol.) पुनर्मैत्विंद्रियमिति (vii. 67. 1) यं (!) सर्वकर्म यावंति विधिकर्माणि सर्वास्त्र्यां भवंति विधिकर्माणि. — [3] So Ch (prim. man.) D (text); Ch (sec. man.) and the rest वशाया; D (schol.) अनया वशया पशुपाकयज्ञा कथिता वेदितव्या इति. — [4] v. 1. 7; vii. 43. 1 (et al.). — [5] D (schol.) प्रतिषिद्धकर्मकर्तृत्वेनाभिशस्तः अभ्याख्यातः तस्मै मंथनौ (! for मंथौदनौ; cf. Kāuç. 7. 7) प्रयच्छति प्रायश्चित्तं. — [6] D (schol.) द्रुघणं रथकारोपस्करः । द्रुममयो घनः (cf. Nirukta 9. 23). — [7] D (schol.) द्रुघणशिरःसदृशः पालाशः (!) प्रसिद्धः । अयः कृष्णलोहं । ताम्रं हिरण्य(:) सुवर्णमेतेभ्यः द्रुघणशिर इव कृत्वा बध्नाति । अभ्याख्यातप्रायश्चित्तं. — [8] vi. 7. 1. — [9] D (schol.) आर्त्विज्यं करिष्यन्. — [10] D (schol.) adds: आज्यतंत्रेण याजनकृतमेनः स्पृशति। आ नो भरेत्यनुक्ता (v. 7. 1) येन सोमेति अस्य विधाने क्रमभेदः किमर्थ उच्यते। आ नो भरेत्यस्य यत्रतत्रस्थस्य सूक्तं संप्रत्ययार्थं। नास्य ग्रहणमा ग्रहणादि(ति) निवृत्तिः (cf. Kāuç. 8. 21). — [11] D (schol.) याजनसमाप्तौ यजते सोमो देवता मंत्रलिंगात् । नादित्यादिभ्यो नैघंटुकत्वात्. — [12] D (schol.) यं याचामीत्यत आरभ्य सूक्तशेषेण (v. 7. 5–10) यदाशसेति द्वे (vii. 57. 1, 2). — [13] P Bh याचयिषन्; D (schol.) प्रार्थं करिष्यन् . . . अनयोरभ्यंतरेण प्रतिग्र(ह)कृतमेनः स्पृशति । निधने याचनवचनात्. — [14] vi. 27. 1; 28. 1; 29. 1. —

पते[1]। ७। परीमे ऽग्निमित्यग्निं[2] गामादाय निशि कारयमाणस्त्रिः शालां परिणयति[3]। ८। परो ऽपेहि यो न जीव इति[4] स्वप्नं दृष्ट्वा मुखं विमार्ष्टि। ९। अतिघोरं दृष्ट्वा मैश्रधान्यं पुरोडाशमन्याशायां[5] वा निदधाति। १०। पर्यावर्ते इति[6] पर्यावर्तते[7]। ११। यत्स्वप्न[8] इत्यशित्वा वीक्षते[9]। १२। विद्म ते स्वप्नेति[10] सर्वेषामप्ययः। १३। नहि ते अग्ने तन्व[11] इति ब्रह्मचार्याचार्यस्यादहन उपसमाधाय त्रिः[12] परिक्रम्य पुरोडाशं जुहोति[13]। १४। चिरात्रमपर्याव-

---

[1] D (schol.) मंत्रोक्तार्थं उलूककपोताः तेभ्यः अनुचितदेशगतेभ्यो यद्शर्मातं (!) निष्क्रियायेदमुच्यते। ... कृत्याप्रतिहरणवत्। तं तुल्यनिर्देशस्त्वोभयोः समानकर्मत्वात्। विषये (! for विशये; cf. Kāuç. S. 10) यथान्तरमिति तस्मादग्रतः प्रोचन्नित्यादि- (Kāuç. 39. 8) कृत्याप्रतिहरवन्मा भूदिति (! cf. 39. 9, end) अस्मात्. — [2] vi. 28. 2. — [3] D (schol.) कारयमाणो ऽग्निं गां चाददाति (Cod. च॰)। मंत्रस्तं कर्तुः सामर्थ्यात्। निशीत्यवयवग्रहणं कृत्याप्रतिहरणं ग्रंथस्य निश्युपमुच्य (Kāuç. 39. 8) इत्यादि मा भूदित्यकस्मात् (! cf. 39. 9, end) कर्तुः सोमो यस्या (!) मंत्रोक्तानि पतनं. — [4] vi. 45. 1; 46. 1; these and the following pratīkas occur in the दुःस्वप्ननाशनगण, in the gaṇamālā (Ath. Pariç. 34. 8): दौष्वप्न्यं दौर्जीवित्यं परो ऽपेहि यो न जीवो ऽसि पर्यावर्ते दुष्वप्न्याद्यत्स्वप्ने अन्नमश्नामि यो न स्तायद्दिप्सति यो नः सुप्तां जाग्रतो यन्मे मनसो दुष्वप्न्यं काम स्वप्नं सुप्त्वा विद्म तेति (!) त्रयः पर्याया दुःस्वप्ननाशनानि॥ ८॥. The pratīkas are; iv. 17. 5; vi. 45. 1; 46. 1; vii. 100. 1; 101. 1; 108. 1, 2; ix. 2. 2, 3; x. 3. 6; vi. 46. 2 or xvi. 5. 1–3. — [5] Ch E अन्याशालायां; D (schol.) शत्रुचित्ते वा मंत्रलिंगात्। यथासंख्यं विमार्जनेन योगः। ग्रहणस्यान्यार्थ(त्वा)त्। सांग्रामिकवत्; cf. sū. 14, note. — [6] vii. 100. 1. — [7] D (schol.) येन पार्श्वेन सुप्तेन दृष्टः ततो ऽन्येन पार्श्वेन शेते। नहि ते अग्न तन्व (vi. 49. 1) इत्युक्त्वा वा पर्यावर्तते इत्यस्योच्यते स्वप्नसामान्यात्. — [8] vii. 101. 1. — [9] K मीक्षते; D (schol.) मंत्रांते निहालयते। (! for निद्रां लभते?) अन्नमिव भुक्त्वा. — [10] vi. 46. 2 (or xvi. 5. 1); D (schol.) अस्य पर्यायस्य (cf. the end of the दुःस्वप्ननाशनगण, above sū. 9, note) सर्वाणि स्वप्नप्रायश्चित्तानि भवंति। अनुक्रमभेदविशेषसामान्यादेव. — [11] vi. 49. 1. — [12] Bü Bh त्रिष्प॰. — [13] D (schol.) जुहोतिग्रहणं अन्याशायां वा निदधातीति मा भूत्. —

तेमानः शयीत[1]।१५।नोपशयीतेति[2] कौशिकः।१६।स्नानीयाभिः[3] स्नायात् ।१७। अपर्यवेतव्रतः प्रत्युपेयात्[4]।१८। अवकीर्णिने[5] दर्भशुल्बमासज्य यत्ते[6] देवीत्यावपति[7]।१९। एवं संपातवतोदपात्रेणावसिच्य[8] ।२०। मन्त्रोक्तं शान्त्युदकेन संप्रोक्ष्य[9] ।२१। सं समिदिति[10] स्वयंप्रज्वलितेऽग्नौ[11] ।२२। अग्नी रक्षांसि सेधतीति[12] सेधन्तम्[13]।२३। यदस्मृतीति[14] संदेशमपर्याप्य[15] ।२४। प्रत्नो हीति[16] पापनक्षत्रे जाताय मूलेन[17] ।२५। मा ज्येष्ठं तृते देवा इति[18] परिविन्निपरिविविदानावुदकान्ते मौञ्जैः पर्वसु बद्ध्वा पिञ्जूलीभिराप्लावयति[19]।२६। अवसिञ्चति ।२७। फेनेषूत-

---

[1] D (schol.) गुरुपार्श्वेनेत्यर्थः। आदहनाभिमुखो (Cod. °खा) गौरवात्। आदहनसमीप उपशब्दात्. — [2] D (schol.) तस्माद्गोत्रेणाभिधानं कृतः अशुचित्वात्. — [3] K Bü Ch E D (text) स्नानीयाभि; D (schol.) अपो दिव्या (vii. 89. 1, et al.) इत्यासां. — [4] D (schol.) असमाप्तब्रह्मचार्य (Cod. असमाप्तं) पुनरुपनयनं कारयेत्. — [5] Ch अवीकर्णे. — [6] vi. 63. 1. — [7] D (schol.) ग्रीवायां आवपति। व्रीहियवतिलानां अन्यतमविकल्पेन (cf. Kāuç. 7. 5). — [8] D (schol.) यत्ते देवीति सूक्तेन... उदपात्रे दर्भशुल्बमेवासज्य (Cod. °सव्य) ग्रीवायामावपति. — [9] D (schol.) शुल्ब इत्युदकेनोपसिच्य। यत्ते देवीत्यत्र विमोक उक्तं करोति। तत्ते वि ष्यामीति (vi. 63. 1c) पूर्वं शान्त्युदकेनोपसिच्य ग्रीवास्थं शुल्बं ... — [10] vi. 63. 4. — [11] D (schol.) अनया यदि काष्ठैर्विनांगारावस्थं ज्वलति तत अग्नौ सकृज्जुहोति. — [12] viii. 3. 26. — [13] D (text and schol.) अग्नी रक्षांसि सेधतीति सेधं (!) हस्तं तमिवाग्निमुपतिष्ठते. — [14] vii. 106. 1. — [15] D (schol.) अग्निमुपतिष्ठते. — [16] vi. 110. 1. — [17] D (schol.) मूलेन कर्म व्याख्यातं मूलवा (!) फलवानिति एत (!) मूलजातस्येदमेव पापनक्षत्रत्वात् ज्येष्ठादीनि पापनक्षत्राणि. — [18] vi. 112. 1; 113. 1. — [19] Ch E D (text) °परिविविदानानु°; D (schol.) परिविवित्तिष्ठः (! for °वित्तिर्ज्येष्ठः ?) परिविविदानः कनीयान्परिणीतः (Cod. °णतः) ज्येष्ठेनापरिणीतेन ... उदकसमीपे मौञ्जैः पाशैः शरीरसंधिषु बद्ध्वा संपाताभिरद्भिर्पिञ्जूलीभिराप्लावयति ... —

रान्पाशानाधाय नदीनां फेनानिति[1] प्रप्लावयति[2]। २८। सर्वैश्च प्रविश्यापां सूक्तैः[3]। २९। देवहेडनेन[4] मन्त्रोक्तम्[5]। ३०। आचार्याय[6]। ३१। उपदधीत[7]। ३२। खदाशयस्यावपते[8]। ३३। वैवस्वतं यजते[9]। ३४। चतुःशरावं ददाति[10]। ३५। उत्तमर्णे मृते तदपत्याय प्रयच्छति[11]।३६। सगोत्राय[12]। ३७। श्मशाने निवपति[13]। ३८। चतुष्पथे च[14]। ३९। कक्षानादीपयति। ४०। दिवो नु मामिति[15] वीध्रबिन्दून्प्रक्षालयति[16, 17]।४१। मन्त्रोक्तैः स्पृशति[18]।४२। यस्योत्तमदन्तौ पूर्वौ जायेते यौ[19] व्याघ्रावित्यावपति।४३। मन्त्रोक्तान्दंशयति[20]।४४। शान्त्युदकभृतमादिष्टानामाश-[21]

---

1 vi. 113. 2°. — 2 D (schol.) नदीफेनेषु तान्मौंजान्पाशानास्थापयति (Cod. तन्मौं°)। कथं उत्तरोत्तरपाशयोर्यन्यं (? Cod. °पाशोयर्यन्य?) पाशमित्यशेषकिल्बिषप्रवणस्य (Cod. °वाणस्य?). — 3 D (schol.) अंवयो यन्तीति गणः (i. 4. 1, etc.; cf. Kāuç. 7. 14, note) निवेशनं प्रविश्य कर्ताप्लावयति. — 4 D (schol.) यद्देवा देवहेडनमिति सर्वो ऽनुवाकनाम्नाभिधानात्; vi. 114. 1 fg.; cf. Kāuç. 60. 7. — 5 D (schol.) कुर्यादिति शेषः। . . . मेदस्वता स्रुचाज्यं जुहोति (cf. vi. 114. 3) गार्हपत्ये मातापित्रोश्चित्यामारोप्यमानयोः जेहींसिमेति (! for जिहिंसिमेति? cf. vi. 120. 1) लिंगात्. — 6 D (text and schol.) आचार्याय च। मंत्रोक्तं कुर्याद्वचनाच्चतुर्थनिर्देशादिति गार्हपत्ये अथ जीवति स्यात्. — 7 D (schol.) हविषामन्यतमं जुहुयात्। देवहेडनेन. — 8 D (schol.) खदायां (? Cod. वेदायं) शेते (Cod. °ति) यद्धान्यं (Cod. °द्धान्यं). — 9 D (schol.) विवस्वते खदाशयचरुं कुर्यात्. — 10 D (schol.) खदाशयधान्यस्य... ब्राह्मणाय दद्यात्। ...खदाशयस्य कर्माणि त्रीणि... आवापादीनि. — 11 D (schol.) देवहेडनेन अभिमंत्र्य. — 12 D (schol.) अपत्याभावे. — 13 D (schol.) सगोत्राभावे. — 14 D (schol.) श्मशानाभावे. — 15 vi. 124. 1. — 16 K P Bü Bi °ते. — 17 D (schol.) विगताभ्रबिन्दून् पतितां शरीरे प्रक्षालयति द्वाभ्यां. — 18 D (schol.) अथवा वृक्षोत्पतितैः फलैः आम्रादिभिः (Cod. आभ्रा°). — 19 vi. 140. 1. — 20 D (schol.) व्रीह्यादीन्. — 21 व्रीह्यादीनामन्यतमं. —

यति।४५। पितरौ च।४६। इदं यत्कृष्णा[1] इति कृष्णशकुनिनाधिक्षिप्तं[2] प्रक्षालयति। ४७। उपमृष्टं[3] पर्यग्नि करोति।४८। प्रतीचीनफल[4] इत्यपामार्गेध्मे ऽपामार्गीरादधाति[5]।४९। यदर्वाचीनमित्याचामति[6]।५०। यत्ते भूम[7] इति विखनति।५१। यत्र ऊनमिति[8] संवपति[9]।५२। प्रेहि प्र हरेति कापिञ्जलानि[10] स्वस्त्ययनानि भवन्ति। ५३।

प्रेहि प्र हर वा दावान्गृहेभ्यः[11] स्वस्तये।
कपिञ्जल प्रदक्षिणं शतपत्त्राभि नो वद॥
भद्रं वद दक्षिणतो भद्रमुत्तरतो वद।
भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल॥
शुनं[12] वद दक्षिणतः शुनमुत्तरतो वद।
शुनं पुरस्तान्नो वद शुनं पश्चात्कपिञ्जल॥
भद्रं वद पुत्रैर्भद्रं वद गृहेषु च[13]।
भद्रमस्माकं वद भद्रं नो अभयं वद॥
आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः[14]।

---

[1] vii. 64. 1. — [2] D (text) °नाचिप्तं; D (schol.) कृष्णशकुनिः काक अधिक्षेपः. — [3] Ch Bh अपमृष्टं; E अमृष्टं; D (text) अमृतष्टं; D (schol.) कृष्णशकुनिस्पृष्टं. — [4] vii. 65. 1. — [5] D (schol.) अपामार्गसमिधः. — [6] x. 5. 22; D (schol.) अनृतमुत्का . . . — [7] xii. 1. 35. — [8] xii. 1. 61^c. — [9] D (schol.) अनया गर्तादिपूरणं। मृदन्तरयोगात् पृथिव्यूनप्रतिपूरणे प्रायश्चित्तत्वं. — [10] K कपिञ्जलानि; D (schol.) कपिञ्जलः तित्तिरे (:) सदृशः। तित्तिरिर्वेत्यपरे कपिंजलवासितानि तान्यशोभनानि अपि शाम्यंत एवं यदा न शमितानि तानि तदा स्वस्त्ययनानि भवंति. The Nakṣatrakalpa, kaṇḍikā 36, has the following passage: सेनां चेदभ्युत्थितां कपिञ्जलः प्रतिवदेद्भद्रं वदेति तिस्रः कापिञ्जलानि स्तवनानि वदंति. — [11] Thus emended: all MSS. दावा. — [12] Ch E here, and in the following pādas, शुभं. — [13] Bü नः. — [14] Cf. RV. ii. 43. 3. —

यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः[1] ॥
यौवनानि महयसि जिग्युषामिव दुन्दुभिः ।
कपिञ्जल प्रदक्षिणं शतपत्त्राभि नो वदेति
कापिञ्जलानि स्वस्त्ययनानि भवन्ति । ५४ ।
यो अभ्यु बभ्रुणायसि[2] स्वपन्तमत्सि[2] पुरुषं शयानम-
गत्स्वलम्[3] ।
अयस्मयेन ब्रह्मणाश्ममयेन वर्मणा पर्यस्मान्वरुणो
दधादित्यभ्यवकाशे[4] संविशत्यभ्यवकाशे संविशति[5] । ५५ ।
॥ १० ॥ ॥ ४६ ॥

॥ इत्यथर्ववेदे कौशिकसूत्रे पञ्चमो ऽध्यायः समाप्तः ॥

---

[1] Cf. RV. ii. 1. 16, etc. — [2] So Nakṣatrakalpa, kaṇḍikā 36, in two codices from Pūna, and in the Berlin MS. orient. fol. 973; the Chambers codex of the Nakṣatrakalpa, as also Bi Ch K (prim. man.), यो अभ्यबभ्रुणायसि; E K (sec. man.) यो अभ्यबभ्रूणायसि; Bü यो-भ्यबभ्रूणायसि; Bh यो अभ्वभभ्रूणायसि; D या अभ्यबभृणायसि. — [2] So Ch alone; Nakṣatrakalpa, ibid. (all MSS.) and Bü °मत्स; E °मुत्स; Bi °मस्य; K P Bh °मत्स्य. — [3] So K Bü Bh; Ch E Bi P and all MSS. of the Nakṣatrakalpa, °गस्वलम्; is the pāda to be emended to शयानमागन्स्वलं? — [4] E दधादि°. — [5] D (schol.) पुनः कापिंजलानि स्वस्त्ययनानि भवंति। ...या अभ्यबभृणायसि(!) अभ्यवकाशे अंबरे आकाशे च अन्यस्मिन् वा लोकगर्हिते दोषसंयोगात्। दोषशमना(!) यस्या जपः. —

॥ ओं ॥

उभयतः परिछिन्नं शरमयं बर्हिराभिचारिकेषु[1]।१। दक्षिणतः संभारमाहरत्याङ्गिरसम्[2]।२। इङ्गिडमाज्यम्[3]।३। सव्यानि[4]।४। दक्षिणापवर्गाणि[5]।५। दक्षिणाप्रवण ईरिणे[6] दक्षिणामुखः प्रयुङ्क्ते।६। साग्नीनि[7]।७। अथ

---

[1] D introduces this adhyāya as follows: विधिर्नैमित्तिकः (Cod. विश्विनै°) प्रोक्तः संहिताक्रमहेतुकः। क्रमप्राप्तो ऽभिचारस्य संहिताया इहोच्यते। ननु च परविनाशाप्रतिषेधादकर्तव्यस्योपदेशो वक्तव्यः। नैवाभिचारः प्रतिषिध्यते प्रत्युत विधीयते। न ब्राह्मणो वेदयतेत्यादि मनुः पठति; D (schol.) to the sūtra: बर्हि वेदिस्तरणार्थः। अन्यत्र दर्भशब्दप्रयोगात्। अपरेणाग्नेर्दर्भानास्तीर्येत्यादि (Kāuç. 1. 36) अतश्च परिभोजनीयान् दर्भानेव। उभयतः सर्वच्छिन्नमूलाग्राभिप्राया शराः प्रसिद्धाः। तन्मयं वेदिस्तरणाय स्यात् (Cod. स्या) अभिचारप्रयोजनान्याभिचारिकाणि कर्माणि आभिचारिकेष्वाज्यतंत्रं पुरस्ताद्धोमादयो मंत्रांतराह्नात (! for °तराम्नानात्)। जाङ्गायने (cf. Kāuç.3.2) संपाताभावः शांतानामिति विशेषणात् (cf. Kāuç. 3. 20) सबर्हिः साज्या इति या विशेषविधानात्। अत्र चर्वादिभिः (Cod. चरा°) संभारैः सामान्याधिकारात् प्रसव्यं स्तरं प्रसव्यानीति (! for सव्यानीति; see sū. 4)। न पार्वणसमृद्धिकाम्याः शांतानामिति विशेषणसामर्थ्यात्. Cf. Kāuç. 116. 4. — [2] D (schol.) कल्पः बहिरध्यायपठितः (! for °बर्हि°?) आंगिरसः सप्तवर्गपठितः कल्पः बर्हिरध्यायिकस्यातनारभ्यवादात् (!)। ननु वेदिकरणवचनात्। दक्षिणस्यां दिशि अंगिरस (!) अग्निनियमादसिद्धत्वं। यथावितानमिति वचनात् (Kauç. 137. 1)। घोरद्रव्याणां चाहरणविधानात्. — [3] D (schol.) कर्मस्वलोहितादिप्रसंगे इंगिडनियमाच्च वर्पावस्तंबनिवृत्तिः (!) नोत्पवनं कर्ममध्यसंयोगात्। यथादिष्टं बर्हिः प्रस्तीर्येत्यत्रोत्पवनविधिः — [4] D (schol.) अभिचारिकाणि. — [5] D (schol.) दक्षिणस्यां दिशि परिसमापनीयानि. — [6] D (schol.) दक्षिणानिम्नदेशे ईरिणे वा। उभयविशिष्ट इति केचित्. — [7] K साग्नीति; D (schol.) किं चान्यदाभिचारिकाणां आह।

यन्ते तप[1] इति पुरस्ताद्धोमाः । ८ । तथा तदग्ने कृणु जातवेद[2] इत्याज्यभागौ । ९ । निरमुं नुद इति[3] संस्थितहोमाः ।१०। कृत्तिकारोकारोधावाप्येषु[4]।११। भरद्वाजप्रव्रस्केनाङ्गिरसं दण्डं वृश्चति[5]।१२। मृत्योरहमिति[6] बाधकीमादधाति[7]। १३ । य इमामयं वज्र इति[8] द्विगुणामेकवीरात्संनह्य[9, 10] पाशान्निमुष्टितृतीयं[11] दण्डं[12] संपातवत्[13] । १४। पूर्वाभिर्बध्नीते[14] । १५ ।

---

साम्नीनि। न सर्वाणि यानि साम्नीनि अन्यत्र वचनेत्यं (!) नियमः। यज्ञोपवीत्यादि च नियमात् । न चाभिचारिकाणि पित्र्याणि. —

[1] ii. 19. 1; D (schol.) पंच सूक्तानि (ii. 19–23); cf. the पंचापत्यगण, Ath. Pariç. 34. 21, अग्ने यद्दिति पंच सूक्तानि पंचापत्यानि पांचजन्यानि भवंति. Cf. Kāuç. 3. 19, note. — [2] v. 29. 2; D (schol.) द्वे ऋचे (v. 29. 2, 3); cf. Kāuç. 3. 19, note. — [3] vi. 75. 1; D (schol.) सूक्तं; cf. Kāuç. 3. 19, note. — [4] D (text) omits the syllables: °कारो°; D (schol.) अभिचारप्रयोगकालविधिः। कृत्तिकासु नक्षत्रे अरोधः कृष्णपक्ष अरोधकः अवाप्य समावास्या (!for सा°?) एषु कालेष्वभिचारः कार्यः कृत्तिकासु चारोधे च (? Cod. कृत्तामुचरोधेचारोधे वा!) अवाप्यग्रहणमा विधानात्समाप्तेः (!for °नसमाप्तेः?) अवाप्यग्रहणमा अंत्यविमोकात. — [5] D (schol.) द्यावापृथिवी उर्वंतरिक्षमिति सूक्तं (ii. 12) भरद्वाजप्रव्रस्कं भरद्वाजसंप्रत्ययार्थं । आंगिरसग्रहणं पूर्वं चकार असंप्रयोग अंगिरसप्रसंगादेव सूक्तं द्वयांते (ii. 12. 2) च्छेदनं तृतीयाश्रावणात् (ii. 12. 3). — [6] vi. 133. 3. — [7] D (schol.) व्याधिघातिकसमिधमादधाति . . . ये ऽमावास्यामिति (i. 16. 1; cf. sū. 23) च क्रमकोपः प्रधानादित्वादस्यांगत्वात्; cf. sū. 48. — [8] vi. 133. 1; 134. 1. — [9] E Bi एकवीरात्; K Ch D (text) °वीरान्; P °वीरान्त्स°; Bü °वीरा. — [10] संनह्य only in E and D (text): cf. the word संननाह, vi. 133. 1; the rest संव्युह्य. — [11] So K P Bh Bü Bi; D (text) पाशां निर्मुष्टि°; Ch E पाशान्य°, which is followed in D by the gloss: मुंडहस्तः. — [12] The words तृतीयं दंडं are wanting in D (text). — [13] D (schol.) उभयं (Cod. °य) मेखलां (Cod. °ला) दंडं च य इमा इति सूक्तेन मेखला। अयं वज्र इति सूक्तेन दंडं संपातवंतं करोति. — [14] D (schol.) मेखलां य इमामिति तिसृभिर्ऋग्भिः (vi. 133. 1–3) स्त्रीलिंगनिर्देशात. —

वज्रो ऽसि सपत्नहा त्वयाद्य वृत्रं साक्षीय।
त्वामद्य वनस्पते वृक्षाणामुदयुष्महि[1] ॥
स न इन्द्र पुरोहितो विश्वतः पाहि रक्षसः[2]।
अभि गावो[3] अनूषताभि द्युम्नं बृहस्पते ॥
प्राण[4] प्राणं त्रयस्वासो असवे मृड ।
निर्ऋते निर्ऋत्या नः पाशेभ्यो मुञ्च[5] ॥

इति दण्डमादत्ते।१६। भक्तस्याहुतेन मेखलाया[6] ग्रन्थिमालिम्पति[7]।१७। अयं वज्र इति[8] बाह्यतो दण्डमूर्ध्वमवाग्रं तिसृभिरन्वृचं निहन्ति[9]।१८। अन्तरुपस्पृशेत[10]।१९। यदश्नामीति[11] मन्त्रोक्तम्[12]।२०। यत्पात्रमाहन्ति फट्टतो[13] ऽसाविति[14]।२१। इदमहमामुष्यायणस्यामुष्याः[15] पुत्रस्य प्राणापानावप्यायच्छामीत्यायच्छति[16]।२२। ये ऽमावास्यामि-[17]

---

[1] K वृत्राच्चामु°. — [2] Thus emended; MSS. रच्चतः (cf. विश्वतः in the same pāda). — [3] Cf. for this pāda, RV. ix. 32. 5ª. — [4] K प्राणः. — [5] So only K (sec. man.) and AV; K (prim. man.) Bü Bh Ch E P Bi मुञ्चतु; the verse ending here occurs at xix. 44. 4. — [6] So emended; all MSS. except D, मेखलया; D (text and schol.) मेखला°. — [7] Ch °लिम्पयति; D (schol.) मेखलाग्रंथी (!) सुष्ठु लिंपति। ग्रंथ्यालिपनादि प्रत्यहं. — [8] vi. 134. 1. — [9] D (schol.) प्रेरयत्यधः. — [10] D (schol.) सदः प्रविश्य उदकमुपस्पृशेत्. — [11] vi. 135. 1. — [12] D (schol.) अशनं पानं च कुर्यात्। यथार्थलिंगप्रयुक्तस्य भक्तस्याहुतेनेत्येवमादि आदौ तु सकृत्। दंडदानंत प्राग्योगात्। अग्ने व्रतपत इति (Kāuç. 6. 19; 42. 16) योगविमुक्तस्य पुनः सर्वां (!) आह च आचमनं सकृद्योगात्। भक्तादिप्रत्ययपरिविमुक्तस्य पुनः सर्वं संकीर्णे ऽपि विधौ तदा. — [13] K Ch Bh P फढ्ढतो; Bü फठतो; E फद्दतो. — [14] D (schol.) यद्भोजनपात्रं तदाहंति। फठतो (!) रामः इत्यमुना. — [15] K Bü Ch P Bi Bh °ममुष्यायण°; cf. x. 5. 36; Kāuç. 44. 31. — [16] D (schol.) दंडं गृह्णाति। इदमहं रामस्य.... प्राणापानावप्यायच्छामीति ... — [17] i. 16. 1. —

ति संनह्य सीसचूर्णानि भक्ते ऽलंकारे[1] । २३ । पराभूतवेणोर्यष्ट्या बाहुमात्र्यालंकृतयाहन्ति[2] । २४ । द्यावापृथिवी उर्विति[3] परशुपलाशेन दक्षिणा धावतः पदं वृश्चति[4] ।२५। अन्वक्त्रिस्तिर्यक्त्रिः[5] ।२६। अक्ष्णया[6] संस्थाप्य ।२७। आव्रस्कान्यांशून्पलाशमुपनह्य[7, 8] भ्रष्ट्रे[9] ऽभ्यस्यति ।२८। स्फोटत्सुस्तृतः[11] ।२९। पश्चादग्नेः कर्ष्वां[12] कूद्युपस्तीर्णायां द्वादशरात्रमपर्यावर्तमानः शयीत[13] ।३०। तत उत्थाय त्रिरह्न[14] उदवज्रान्प्रहरति[15] । ३१ । नद्या अनामसंपन्नाया अश्मानं प्रास्य-

---

[1] D (schol) सीसानि कथितानि (Kāuç. 8. 18) । तानि चूर्णीकृत्य . . . पटे बद्धानि तानि भक्त आवपेद्द्विष्यस्य । अथवा द्वेष्यालंकारे. — [2] D (schol.) द्वेष्यं. — [3] ii. 12. 1. — [4] D (schol.) पलाशं कुठारमुखं दक्षिणायां दिशि धावतः द्वेष्यस्य पादस्थानं छिनत्ति. — [5] D (text and schol.) छेदनविधिमाह । अन्वक्त्रिः । अनुपदरेखाभिः तिर्यक् त्रिः (Cod. तिर्यक् । त्रिः) । पृथुत्वेन त्रिभिः. — [6] So emended; Ch (sec. man.) D (text and schol.) अक्ष्णायां; K Bü E P Bi Bh Ch (prim. man.) अयक्ष्णयां; D (schol.) अक्ष्णः कोणः कोणे न समापनं कोण द्वित्वा (! for कोणे छित्वा?) द्वयो रेखयोः क्रिया प्रतिरेखं (Cod. °षं) सूक्तावृत्तिः । संस्थाप्येति वचनं प्रतिव्रश्चनग्रहणं मा भूत्. — [7] D (text) आवृस्का°. — [8] P B °पांश्रून्प°; Bh °पाश्रून्प°; Ch (prim. man.) °यांसून्प°; Ch (sec. man.) °पांसून्प°; D (text) °यासन्प. Is the passage to be emended to आव्रस्कात्पांसून्पलाशमुपनह्य? — [9] So Bü Bh Ch (sec. man.); K E P Bi Ch (prim. man.) D (text and schol.) भ्रष्टे; cf. Dārila to Kāuç. 48. 11. — [10] D (text) न्यस्यति; D (schol.) वृश्चिता अदन्यांशून् (for वृश्चितादन्यांशून्) गृहीत्वा वधकपर्णे (Cod. व°) बध्वा भ्रष्टे (!) लोकप्रसिद्धे क्षिपति क्षेपणे मंत्रः प्रधानवदभिधानात्. — [11] So only E Bi; K P Bh स्मृतः; Bü सृतः; Ch सुतः; D (text) स्मृतः; D (schol.) शब्द अंशुषु मृतो द्वेष्य इति ज्ञेयं: cf. sū. 38 and 48. 21. — [12] So emended; K Ch P Bi Bh D (text) कर्ष्वां; Bü करीर्वां; E कर्षां. — [13] D (schol.) न चेच्छब्दः । . . . . पश्चादग्नेः कूद्योपस्तृणाति कूदी बदरी . . . शयीत प्राप्ते संवेशने ऽयं विधिः भक्तस्याङ्कतेनेति (see sū. 17) प्रत्यहं. — [14] Ch E तृर°. — [15] D (schol.) ततः कर्ष्वां त्रिः उदवज्रान् क्षिपति । दिवस्य त्रिःकर्मविधिः नामधेयात्स्वयमिंद्रस्यौज इति (x. 5. 1; Kāuç. 49. 2) यो व आपो ऽपां यं वयं अपामस्मै वज्रमिति (x. 5. 15, 42, 50; Kāuç. 49. 11) प्रहरणमंत्राः । प्रत्यहं इदमंगकर्म; cf. also Kāuç. 38. 2. —

ति[1] । ३२ । उष्णे ऽक्षतसक्तूननूपमथितानुच्छ्वसन्पिब-
ति[2] । ३३ । कथं त्रींस्त्रीन्काशीं स्त्रिरात्रम्[3] । ३४ । द्वौद्वौ
त्रिरात्रम्[4] । ३५ । एकैकं षड्रात्रम्[5] । ३६ । द्वादश्याः प्रातः
क्षीरौदनं भोजयित्वोच्छिष्टानुच्छिष्टं बहुमत्स्ये प्रकिरति[6] ।३७।
संधावत्सु स्तृतः[7] । ३८ । लोहितशिरसं कृकलासममून्ह-
न्मीति हत्वा सद्यः कार्यो भाङ्गे शयने[8] । ३९ । लोहिता-
लंकृतं[9] कृष्णवसनमनूक्तं[10] दहति । ४० । एकपदाभिरन्यो
ऽनुतिष्ठति[11] ।४१। अङ्गशः[12] सर्वहुतमन्यम्[13] ।४२। पश्चा-

---

[1] So emended; K Bü P Bh D (text) प्राश्यति, cf. also Dārila to Kāuç. 48. 20; Ch E Bi प्रहरति; D (schol.) यस्या नद्या विशेषनाम नास्ति तस्या अश्मानं गृहीत्वा अपरा न संप्रत्ययात् । एतत् त्रिरह्नः प्रकरणात् । द्यावापृथिवी इति सूक्तेन (ii. 12. 1; cf. sū. 25) दक्षिणतः दक्षिणामुख इति (see sū. 6) वचनात्. — [2] So Ch; Bü अनूच्छ्रसंन्पि°; Bi अनुच्छ्रसन्; K Bh अनुच्छ्रसं; P अनूछ्रसं; E अनूछ्रसं; D (text) °नूष्वसं; D (schol.) अनुत्खासं पिबति कर्ता. — [3] K Bh त्रिस्त्रीन्का°; Bi त्रिंस्त्रीन्का°; D (schol.) त्रीनेकैकस्मिन्नहनि (Cod. त्रिने°) त्रीण्यहानि. — [4] D (schol.) अनुच्छ्रसं (Cod. अनूछ्रसं) पिबतीत्यादि (Cod. °बत्यादि) भक्तस्याङ्क्तेनेति (see sū. 17) स्मर्तव्यं. — [5] D (schol.) एकैकमुच्छिष्टमहन्यहनि एवं षडहानि प्रत्यहं द्यावापृथिवी (ii. 12. 1) इत्यनुमंत्रणम्. — [6] D (schol.) क्षीरौदनं भोजयति द्वेष्यं . . . उच्छिष्टं भोजनपात्रस्थं अनुच्छिष्टं कुम्भीस्थं बहवो यत्रोदके मत्स्या तत्र प्रकर्षेण क्षिपति. — [7] So Bi K (prim. man.); Ch Bü E D (text) सृतः; K (sec. man.) P Bh स्पृतः; D (schol.) यदि मत्स्याः पङ्क्तीः (Cod. पा°) धावंति । तमन्नं ततो मृतः शत्रुरिति ज्ञेयं; cf. sū. 29 and 48. 21. — [8] D (schol.) रक्तवर्णशिरसं चामून्हन्मीति मंत्रेण मारयित्वा सद्यः कार्यमिति वक्तव्यं। अभिचारिकप्रकरणात् . . . भांगिकशयने कृकलाशं करोति; cf. Kāuç. S. 18. — [9] E °कृतो. — [10] Ch E °वस्त्रम°; D (schol.) कृष्णवस्त्रपरिहितं. — [11] So K Bü P Bi; Ch D (text) अन्योन्यवत्तिष्ठति; E अन्यन्यव°; D (schol.) प्रकृतमेवैकावसाना कार्या (!) । अन्योन्यकर्ता (!) अनुष्ठानं। समूहनं सद्यः समानकालमेव हननं (Cod. °न) अनुतिष्ठति। वचनं देहोपचारार्थं. — [12] Ch मंगलशः; E अंगलशः. — [13] D (schol.) अन्यं लोहितशिरसं कृकलासं अमून्हन्मीत्येवं हत्वा सद्यः कार्यो (Cod. कार्ये) . . . —

दग्नेः शरभृष्टीर्निधायोदग्व्रजत्या[1] स्वेदजननात्[2]।४३। निवृत्य[3] स्वेदालंकृता जुहोति[4]।४४। कोश उरःशिरो[5] ऽवधाय[6] पदात्पांसून्[7]।४५। पश्चादग्नेर्लवणमृडीचीस्तिस्रो[8] ऽशीतीर्विकर्णीः[9, 10] शर्कराणाम्[11]।४६। विषं शिरसि[12]।४७। वाधकेनावागग्रेण प्रणयन्नन्वाह[13]।४८। पाशे[14] स इति[15] कोशे ग्रन्थीनुद्ग्रथ्नाति[16]।४९। आमुमित्यादत्ते[17]।५०। मर्म-

---

[1] K P Bh भृष्टीन्नि°. — [2] D (schol.) उत्तरतंत्रे (Cod. °त्र) प्रवृत्ते दीर्घाः शराः स्फाटिताः शरभृष्ट्याः स्थिताः शरभृष्टीः स्थापयित्वा उदग्मुखो . . . यावत्प्रस्विन्नस्तावद्व्रजति. — [3] D (text) निवृत्त्य. — [4] D (schol.) अभ्यक्ता शरभृष्टोर्जुहोत्यष्टौ प्रत्यृचं (ii. 12. 1–8) . . . अभ्यातानांते. — [5] Thus emended; MSS. उरशिरो. — [6] K बंधाय; Bh बधाय. — [7] All MSS. except E पांसून्; D (schol.) अवनीतमांसास्थिकृकलासशरीरं (Cod. °र) कोश उरः (Cod. °र) शिरश्च उरशिरः तदुरसि सं (! for स?) कोशे प्रवेशयति। . . . द्वेष्यस्य पादात्पांसून्कोशे ऽवधाय. — [8] E °मृडीची तिस्रो; Bi °मृडी। वास्तिस्रो (!). — [9] So emended; Ch E °शीति वि°; D (text) °सीति वि°; P Bi °चीतिर्वि°; K Bü °शीतिर्वि°. — [10] So (°कर्णीः) emended; MSS. °कर्णी. — [11] D (schol.) कोशे ऽवधाय। मृडीचीशब्दः अल्पपर्यायः (Cod. °पूर्यायः) लवणरूजकाः (! for रुचकः? cf. Pet. Lex. sub रुचक, end) कल्प (! for अल्प?) इत्यर्थः। तिस्र इति संख्या अशीतिरिति च। विकर्णी (!) शर्कराणां चेति सामर्थ्या (!?) विगतकर्णानां (? Cod. °माणानां) च। शर्कराणां तिस्रो ऽशीति (!) कोशे ऽवधाय. — [12] D (schol.) कोशे शिरसि विषमवदधाति। असमासः लवणशर्कराणामिति। द्वंद्वः संदेहाद्विशेषणसंबंधार्थं च. — [13] E Ch (prim. man.) D (text) प्रणयनम°; D (schol.) व्याधिघातकदंडेन (cf. sū. 12) प्रेरयन्मर्म प्रतिकोशं अन्वाह। प्रकृतेन सूक्तेनावागग्रेण. — [14] K P Bh पाशं. — [15] D (schol.) पाशे स बद्ध इत्यर्द्धर्चेन; ii. 12. 2c. — [16] D (schol.) पाशाकाशान् (! for पाशकोशान्; ाका for को?) कथं तत्र दंडेना (!) दंडं स्यात्। ततः प्रणयन इत्येवं कर्म प्रथमं प्रणयनं कस्मादुच्यते सूक्ते ऽनुच्यमाने पाशे स इत्यस्य क्रमे कथमुद्ग्रथ्नीयाद् (Cod. °ग्रथ्नाद्) इत्यस्यादित्य (?) न प्रणयनविधानं प्रथमं गृहीतस्य वनपयनासंभवात् (?)। तद्देश एवादानं। तमनुवचनात्. — [17] So emended; MSS. असुम्; ii. 12. 4d; D (schol.) वाममादत्त इति। अनेन गृह्णाति। दंडेन ततो न यं(!) ब्रूयात्। इह सूत्रन्यासा उद्ग्रंथितग्रहणं (Cod. उदग्रं°) यथा स्यात्. —

णि[1] खादिरेण स्रुवेण गर्तं खनति[2] ।५१। बाहुमात्रमतीव[3] इति शरैरवज्वालयति[4] । ५२ । अवधाय संचित्य लो[ष्टं] स्रुवेण समोप्य[5] । ५३ । अमुमुन्नैषमित्युक्तावलेख-नीम्[6,7] । ५४ । छायां वा[8] । ५५ । उपनिनयते[9] । ५६ । अन्वाह[10] । ५७ । ॥ १ ॥ ॥ ४७ ॥

भ्रातृव्यक्षयणमित्यरण्ये[11] सपत्नक्षयणीरादधाति[12] ।१। ग्राममेत्यावपति[13] । २ । पुमान्पुंस[14] इति मन्त्रोक्तमभिहु-तालंकृतं बध्नाति[15] ।३। यावन्तः सपत्नास्तावतः[16] पाशा-निङ्गिडालंकृतान्संपातवतोऽनूक्तान्ससूत्रांश्चम्वा[17] मर्मणि

---

[1] Ch E D (text and schol.) मर्माणि. — [2] D (schol.) मर्माणि मंत्रोक्तानि।... खादिरस्रुवः तेन गर्तं खनति; cf. Kāuç. 48. 4. — [3] ii. 12. 6. — [4] D (schol.) गर्तं शरैस्तापयति मंत्रलिंगात्. — [5] D (schol.) गर्तें कोशे प्रक्षिप्य । लोष्टं संचयनीकृत्य (Cod. लोष्टसंचनी°) गर्तें । खा-तान्पांसून् गर्तें कृत्वा. — [6] So (अमुमुन्नैषम्) only Bü; Ch E D (text) अममुन्नै°; K P Bi Bh (समोप्या)मुन्नैषम्. — [7] Bü E D (text) °लेखनी; D (text and schol.) अममुन्नैषमिति अनेन मंत्रेण (where?) उक्तावलेखनीं । अस्य सूक्तस्य प्रतिकृतिमावलेखनीमिति वेधांतकर्म (see Kāuç. 35. 28; 49. 23). — [8] D (text and schol.) छायां वा द्वेष्यस्य (Cod. द्वेष्य) । छायां वा दार्भ्युषेण विध्यति; see Kāuç. 32. 8; 35. 28. — [9] D (text) उपनीयते; D (schol.) द्वेष्यसमीपेनोदकं मार्जयति. — [10] D (schol.) भरद्वाजप्रव्रस्केन (Cod. भार°), ii. 12; see sū. 13. — [11] iii. 18. 1. — [12] D (schol.) समिधः संज्ञानिर्देशात् । अश्वत्थबधकताज-ङ्गगाङ्खदिरशराणां समिधस्तत्र विकल्पः; cf. Kāuç. 16. 14. — [13] D (schol.) जनस्थानमागत्य व्रीहियवतिलानावपति (Kāuç. 7. 5) । तंत्रवि-कल्पः । प्रत्यृचं दक्षिणाप्रवणादेव. — [14] iii. 6. 1. — [15] D (schol.) खादिराज्जातो (!) अश्वत्थमणिं बध्नाति । अभिहुतं कृत्वा अभिहवनं स्रुवदंडे बध्वा (!) होमः । अलंकरणं घृतेन बंधनमभिचरतः. — [16] So emended; MSS. तावन्तः. — [17] Bh °श्चाम्वा; D (text) च (!). —

निखनति[1]।४। नावि प्रेणानुदस्व कामेति[2] मन्त्रोक्तं[3] शाखया प्रणुदति[4]।५। ते ऽधराञ्च इति[5] प्रप्लावयति[6]।६। बृहन्नेषामित्यायन्तं[7] शप्यमानमन्वाह[8]।७। वैकङ्कतेनेति[9] मन्त्रोक्तम्[10]।८। ददिर्हीति[11] साग्नीनि[12]।९। देशकपटु[13] प्रक्षिणाति।१०। ते ऽवदन्निति[14] नेतॄणां पदं वृश्चति[15]।११। अन्वाह[16]।१२। ब्रह्मगवीभ्यामन्वाह[17]।१३। चेष्टाम्[18]।१४। विचृतति[19]।१५।

[1] D (schol.) यावतामभिचारं (Cod. यावंताम॰) कर्तुमिच्छंति तावत्परिमाणान्पाशानिंगिडालंकृतान् संपातवत्कुर्यात् ।... प्रकृतेनैव सूक्तेनानूक्तान्सह सूत्रेण संबंधं कृत्वा मर्माणि (!) निखनति (cf. Kāuç. 47. 51). — [2] iii. 6. 8; ix. 2. 4. — [3] D (text) मंत्रोक्ता. — [4] D (schol.) पूर्वसूक्तेन पाशात् सकृत् ... (the MS. has a lacuna). — [5] iii. 6. 7. — [6] D (schol.) ... अश्वत्थशाखया (Cod. ॰यां) प्रेरयति अनया ऋचा नावमुदकेन पूरयति. — [7] iv. 16. 1. — [8] D (schol.) द्वेष्यो यद्वाकृष्यमाणो अग्निमुख आगच्छेत्ततः अन्वाह. — [9] v. 8. 1. — [10] D (text) joins the word मन्त्रोक्तम् to the next sūtra; Bi divides explicitly as above; D (schol.) स्रुवेण होमः. — [11] v. 13. 1. — [12] So K E D (text); Bü P B Bh Ch साग्निं नि; D (schol.) कर्मातिदेशः कानि तानि। अत्रोपाध्यायवत्सशर्मणः पादाः पठंति। कृकलाशशरभृष्टिसपत्नचयणावारमणिः (!) पाशमंत्रोक्तहोमानां साग्नित्वात् (cf. Kāuç. 47. 39 to 48. 3). — [13] So K Ch P; Bi ॰कषटु; E ॰कपदु; Bü the same or ॰कपटु; D (text) दशकपटु; D (schol.) यत्रायंतम् (Cod. यत्रयातम्) अहिछत्रकं तत्रैव विनाशयति सूक्तांतेन; see Bö. Lex. sub पटु 3. — [14] v. 17. 1. — [15] D (schol.) ब्राह्मण (!) गोनेतॄणां वृश्चति । उक्तेन विधानात् । भ्रष्ट्रे (Cod. भ्रष्टे) ऽभ्यस्यतीत्येवमंतं; cf. Kāuç. 47. 25-28. — [16] D (schol.) अथवान्वाह नेतॄन्. — [17] Here E inserts the passage यं ब्रह्मगवीभ्यामन्वाह, P Bi the same words without यं; D (schol.) नैतां ते देवा इति सूक्ते (v. 18. 1; 19. 1) एका ब्रह्मगवी । (Cod. omits the colon) अमेण तपसेत्यन्या (xii. 5. 1) । आभ्यां ब्रह्मगवीभ्यां नेतॄनन्वाह. — [18] D (schol.) अन्वाहेति विशेषः (!for वाक्यशेषः?) । चेष्टा हननमारणकीर्तनविशसना- (Cod. ॰विसना-) धिश्रयणपचनभक्षणाद्या द्वेष्यगवि या चेष्टा ब्रह्मगव्यायां (!for ॰गवीभ्यां?) चेष्टासमाख्यानात् । ब्रह्मगवीति (v. 19. 4?) मार्यमाणामिति (Cod मार्ष॰; is this a pratīka?) च तथा कल्पांतरे हतगव्यामनुवचनसंयोगः। जीवत्यजीवत्याः (Cod. ॰त्यानीवत्यः) भोगसंयोगात्. — [19] D (schol.) वध्ये हविः कृतेत्यर्थः (!) । कः क्रिया अन्वाह. —

